७. विवृतकरणाः स्वराः ।[1]
८. तेभ्य ए ओ विवृततरौ ।
९. ताभ्यामै औ ।
१०. [ताभ्यामप्याकारः ।][2]
११. संवृतोऽकारः ।
१२. इत्येषोऽन्तःप्रयत्नः ।

## ४—बाह्यप्रयत्नप्रकरणम्

१. अथ बाह्यः ।
२. वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलि
प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोष
३. वर्गयमानां प्रथमे अल्पप्राणा इतरे सर्वे महाप्राण
४. वर्गाणां तृतीयचतुर्थाः अन्तस्था हकारानुस्वारौ
संवृतकण्ठा नादानुप्रदाना घोषवन्तः ।
५. वर्गयमानां तृतीया अन्तस्थाश्चाल्पप्राणा इतरे स
६. यथातृतीयास्तथा पञ्चमाः ।
७. आनुनासिक्यमेषामधिको गुणः ।
८. शादय उष्माणः ।[3]
९. सस्थानेन द्वितीयाः ।
१०. हकारेण चतुर्थाः ।
११. एष बाह्यः प्रयत्नः ।

---

१. इत आरभ्य 'संवृतोऽकारः' इत्यन्तानि पञ्च सूत्रा
उद्ध्रियन्ते ( द्र० पत्र ३ ख )। अत्राह ग्रन्थकारः—'विवृ
शिक्षावाक्यात् । पञ्चमपत्रस्य कपृष्ठे त्वाह—'प्रागुक्तं तु
तेनानुमीयते शब्दभाष्यकार आपिशलीयान्येव सूत्राण्युद्धार

२. सूत्रमेतदत्र त्रुटितं स्यात् शब्दभाष्ये पाणिनीयपा

३. इतः पूर्वं पाणिनीयशिक्षाया वृद्धपाठे 'कादयो म
ऽन्तस्थाः इति द्वे सूत्रे दृश्येते। ते अत्र त्रुटिते इति ज्ञायते,
इत्यप्रासङ्गिकः स्यात् ।

## ५—स्थानपीडनप्रकरणम्

१. तत्र स्पर्शयमवर्णकारो[1] वायुरयःपिण्डवत् स्थानमभिपीडयति।

२. अन्तस्थवर्णकारो[1] वायुर्दारुपिण्डवत्।

३. ऊष्मस्वरवर्णकारो[1] वायुरूर्णापिण्डवत्।

## ६—वृत्तिकारप्रकरणम्

१. एवं व्याख्याने वृत्तिकाराः पठन्ति--अष्टादशप्रभेदमवर्णकुलमिति। अत्र[2]—

२. ह्रस्वदीर्घप्लुतत्वाच्च त्रैस्वर्योपनयेन च।
आनुनासिक्यभेदाच्च संख्यातोऽष्टादशात्मकः॥ इति[3]।

३. एवमिवर्णादयः।

४. लृवर्णस्य दीर्घा न सन्ति।

५. तं द्वादशप्रभेदमाचक्षते।

६. यदृच्छाशक्तिजानुकरणा वा यदा दीर्घाः स्युस्तदा तमप्यष्टादशप्रभेदं ब्रुवते।

७. सन्ध्यक्षराणां ह्रस्वा न सन्ति।

८. तान्यपि द्वादशप्रभेदानि।

९. छन्दोगानां सात्यमुग्रिराणायनीया (नां ?) ह्रस्वानि पठन्ति।

१०. तेषामप्यष्टादशप्रभेदानि।

११. अन्तस्था द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च।

१२. रेफोष्मणां सवर्णा न सन्ति।

१३. वर्ग्यो वर्ग्येण सवर्णः।

---

१. '०वर्णकरो वायु०' पाठ आपिशलशिक्षाया इति हैमबृहन्न्यासे तैत्तिरीयप्रातिशाख्यस्य च वैदिकाभरणटीकायामुद्धृतैः पाठैः प्रतीयते। हैमबृहन्न्यासे (१।१।१७, पृ० २४) नामनिर्देशं विना अस्य प्रकरणस्य त्रीण्यपि सूत्राण्युद्ध्रियन्ते। वैदिकाभरणटीकाकृत्तु 'तदुक्तमापिशलशिक्षायाम्' इत्येवं निर्दिश्य त्रीण्यपि सूत्राण्युद्धृतवान् (तै० प्रा० २३।२)। उभयत्रापि प्रथमसूत्रे 'तत्र' पदं च नास्ति।

२. 'तत् कथम्' इति पाठान्तरम्।

३. श्लोकोऽयं कस्याश्चित् प्राचीनशिक्षात उद्धृत इतीतिकरणात् प्रतीयते।

## ७—प्रक्रमप्रकरणम्

१. एष क्रमो वर्णानाम् ।

२. तत्रैषां स्थानकरणप्रयत्नानां व्याकरणप्रसिद्धिरुच्यते ।

३. इह यत्र स्थाने वर्णा उपलभ्यन्ते तत् स्थानम् ।

४. येन निर्वर्त्यन्ते तत् करणम् ।

५. प्रयतनं प्रयत्नः ।

## ८—नाभितलप्रकरणम्

१. [1]तत्र[2] नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाम वायुरूर्ध्वमाक्रामन्नुरःप्रभृतीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते । स विधार्यमाणो वायुः स्थान[3]मभिहन्ति । तस्मात् स्थानाभिघाताद् ध्वनिरुत्पद्यत आकाशे, सा वर्णश्रुतिः । स वर्णस्यात्मलाभः ।

२. तत्र ध्वना [4]वुत्पद्यमाने यदा स्थानकरणप्रयत्नाः परस्परं स्पृशन्ति सा स्पृष्टता ।

३. यदेषत् स्पृशन्ति तदेषत्[5]स्पृष्टता ।

४. दूरेण यदा[6]स्पृशन्ति सा विवृतता ॥[7]

५. सामीप्येन यदा स्पृशन्ति[8] सा संवृतता ।

---

१. तथा चापिशलिः शिक्षामधीते—नाभिप्रदेशात्....इत्युक्त्वा त्रयोविंशतिसूत्राणि हैमबृहद्वृत्तौ (१।१।१७) उद्धृतानि ॥ 'तद्यथा—नाभिप्रदेशात् प्रयत्नप्रेरितो वायुरूर्ध्वमाक्रामन्नुरस्यादीनां स्थानानामन्यतमं स्थानमभिहन्ति ततः शब्दनिष्पत्तिः' इत्यादिशिक्षाकार........।" भर्तृहरिर्वाक्यपदीयस्य स्वोपज्ञवृत्तौ (काण्ड १, पृष्ठ १०४ लवपुरसंस्करणम्)। अत्र 'तद्यथा' स्थाने 'तथा' पाठोऽपेक्षते । 'तथेत्यापिशलिशिक्षादर्शनम्' इति स्वोपज्ञवृत्तेष्टीकायां वृषभदेव आह । पृ० १०५, लवपुरसंस्करणम् ।

२. 'तत्र' नास्ति, हैम०, शभा च ।

३. विधार्यमाणः स्थान०—हैम० शभा च ।

४. तत्र वर्णध्वना०—हैम० शभा च ।

५. स्पृशन्ति सा ईषत्—हैम० शभा च ।

६. 'यदा दूरेण' शभा ।

७. चतुर्थपञ्चमसूत्रयोः वैपरीत्येन हैमवृत्तौ शब्दभाष्ये च पाठ उपलभ्यते ।

८. यदा सामीप्येन स्पृशन्ति—हैम० शभा च ।

६. इत्येषोऽन्तः प्रयत्नः ।[1]

७. स इदानीं[2] प्राणो नाम वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृत्तो यदा कोष्ठ[3]मभिहन्ति तदा कोष्ठे[4]ऽभिहन्यमाने गलबिलस्य[5] विवृतत्वाद् विवारः, संवृतत्वात् संवारो जायते[6] ।

८. तौ संवारविवारौ ।

९. तत्र यदा कण्ठबिलं[7] संवृतं भवति तदा नादो जायते ।

१०. विवृते कण्ठबिले श्वासो जायते ।[7]

११. तौ श्वासनादावनुप्रदानमित्याचक्षते ।[8]

१२. अन्ये तु ब्रुवते—अनुप्रदानमनुस्वानो घण्टानिर्ह्रादवत् ।[9]

१३. तत्र यदा स्थानाभिघातजे[10]ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गाद् घोषो जायते ।

१४. यदा[11] श्वासोऽनुप्रदीयते तदा श्वासध्वनिसंसर्गाद् अघोषः[12] ।

१५. सा घोषवदघोषता ।[13]

१६. महति वायौ महाप्राणः ।[14]

---

१. 'इति' नास्ति शभा । सूत्रं नास्ति—हैम० ।

२. स इदानीं बाह्यः प्रयत्नः । यदा—इति शभा ।

३. निवृत्तः कोष्ठ०—हैम० शभा च ।

४. ०हन्ति तत्र कोष्ठे—हैम० शभा च ।

५. कण्ठबिलस्य—हैम० शभा च ।

६. 'जायते' नास्ति, हैम० शभा च ।

७. तत्र यदा काण्ठबिलं विवृतं भवति तदा श्वासो जायते, संवृते तु नादः—हैम० शभा च ।

८. 'तावनुप्रदानमाचक्षते'—हैम० 'तावनुप्रदानमाचक्षते केचित्' शभा च ।

९. घण्टाह्लादवत्—हैम०, घण्टादिनिर्ह्लादवत्—शभा ।

१०. स्थानकरणाभिघातजे—हैम०, स्थानकण्ठाभिघातजे—शभा ।

११. यदा तु श्वासो—शभा ।

१२. घोषो जायते—हैम० शभा च ।

१३. सूत्रं नास्ति—हैम० शभा च ।

१४. महाप्राणता जायते—हैम० । तदुक्तं शिक्षायाम्—महति वायौ महाप्राणाः, अल्पे वायावल्पप्राणाः । वैदिकाभरणटीका, तै० प्राति० २।११, पृ० ७२, शभा च ।

१७. अल्पे वायावल्पप्राणः[1] ।

१८. साल्पप्राणमहाप्राणता ।[2]

१९. महाप्राणत्वादूष्मत्वम् ।

२०. यदा सर्वाङ्गानुसारी[3] प्रयत्नस्तीव्रो भवति, तदा गात्रस्य निग्रहः, कण्ठबिलस्य चाणुत्वं[4], स्वरस्य च[5] वायोस्तीव्रगतित्वाद् रौक्ष्यं भवति—तमुदात्तमाचक्षते ।

२१. यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनं, कण्ठबिलस्य[6] महत्त्वं स्वरस्य च[7] वायोर्मन्दगतित्वात् स्निग्धता भवति तमनुदात्तमाचक्षते ।

२२. उदात्तानुदात्तस्वरसन्निपातात् स्वरित इति ।[8]

२३. एवं प्रयत्नोऽभिनिर्वृत्तः कृत्स्नः प्रयत्नो भवति ।[9]

२४. अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥[10]

२५. स्पृष्टत्वमीषत्स्पृष्टत्वं संवृतत्वं तथैव च ।
विवृतत्वं च वर्णानामन्तःकरणमुच्यते ॥

२६. कालो विवारसंवारौ श्वासनादावघोषता ।
घोषोऽल्पप्राणता चैव महाप्राणः स्वरास्त्रयः ॥

२७. बाह्यं करणमाहुस्तान् वर्णानां वर्णवेदिनः ।

॥ इत्यापिशलिशिक्षासूत्राणि समाप्तानि ॥

---

१. अल्पप्राणता—हैम०शभा च । षोडशसप्तदशयोः सूत्रयोर्वैपरीत्येन पाठः—हैम० शभा च ।

२. सूत्रं नास्ति—हैम० शभा च । ३. सर्वगात्रानुसारी—शभा ।

४. कण्ठबिलस्याणुत्वं—शभा । ५. स्वरस्य वायोश्च तीव्र०—शभा ।

६. बिलस्य च महत्त्वं—शभा । ७. स्वरस्य वायोश्च मन्द०—शभा ।

८. अग्रिमसूत्राणि नोद्धृतानि—शभा ।

९. एष कृत्स्नो बाह्यः प्रयत्नः—हैम० ।

१०. 'यदाहुः' इत्युक्त्वोदाहृतः—हैम० ।

ओम्

# अथ पाणिनीयशिक्षा

[ वृद्ध-पाठः[1] ]

१. आकाशवायुप्रभवः शरीरात्
समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो
वर्णत्वमागच्छति यः स शब्दः ।

२. तमक्षरं ब्रह्म परं पवित्रं
गुहाशयं सम्यगुशन्ति विप्राः ।
स श्रेयसा चाभ्युदयेन चैव
सम्यक् प्रयुक्तः पुरुषं युनक्ति ।

३. स्थानमिदं, करणमिदं,
प्रयत्न एष द्विधा,ऽनिलः
स्थानं पीडयति, वृत्तिकारः
प्र क्रम एषो, ऽथ नाभितलात् ।।

४. स्थानकरणप्रयत्नपरेभ्यो वर्णास्त्रिषष्टिः ।

५. चतुःषष्टिरित्येके ।[2]

६. तत्र वर्णानां केषां किं स्थानं किं करणं प्रयत्नश्च ते, द्विधा विजभते (?)

---

१. पाणिनेः शिक्षासूत्राणामाष्टाध्यायीवद् द्वौ पाठौ स्तः । एको लघुः, अपरो वृद्धः । तत्र लघुपाठोऽसम्पूर्ण एवोपलभ्यत इति कृत्वाऽग्रे मुद्रितः । अयं वृद्धपाठो यथा महता प्रयत्नेन पूरितस्तस्य वृत्तं भूमिकायां द्रष्टव्यम् ।

२. तुलना कार्या--त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते स्थिताः ( मताः ) इत्यर्वाचीनायां पाणिनीयशिक्षानाम्ना प्रसिद्धायां शिक्षायाम् ।

## १—स्थानप्रकरणम्

१. तत्र स्थानं तावत्।

२. अकुहविसर्जनीयाः कण्ठ्याः।[1]

३. हविसर्जनीयावुरस्यावेकेषाम्।

४. जिह्वामूलीयो जिह्व्यः।

५. कवर्गावर्णानुस्वारजिह्वामूलीया जिह्व्या एकेषाम्।

६. सर्वमुखस्थानमवर्णमित्येके।[2]

७. कण्ठ्यानास्यमात्रानित्येके।

८. इचुयशास्तालव्याः।[3]

९. ऋटुरषा मूर्धन्याः।[4]

१०. रेफो दन्तमूलीय एकेषाम्।

११. दन्तमूलस्तु तवर्गः।

१२. लृतुलसा दन्त्याः।[5]

१३. वकारो दन्त्योष्ठ्यः।

१४. सृक्किणीस्थानमेकेषाम्।

१५. उपूपध्मानीया ओष्ठ्याः।[6]

१६. अनुस्वारयमा नासिक्याः।[7]

---

१. उद्धृतं न्यासे ( प्रत्या० सूत्र ५, पृष्ठ २२; १।१।९, पृ० ५८ ) पदमञ्जर्यां ( १।१।९, पृ० ५८ ) च।

२. तुलना कार्या—सर्वमुखस्थानमवर्णमेके इच्छन्ति। महाभाष्य १।१।९॥

३. उद्धृतं न्यासे ( प्रत्या० सूत्र ५, पृष्ठ २२; १।१।९, पृ० ५८ ) पदमञ्जर्यां ( १।१।९ पृष्ठ ५८ ) न्यायमञ्जर्यां ( पृ० २०५ ) च।

४. उद्धृतं न्यासे ( प्रत्या० सू० ५ पृष्ठ २०, २२; १।१।९, पृ० ५८ ) पदमञ्जर्यां ( १।१।९, पृ० ५८ ) च।

५. उद्धृतं न्यासे ( प्रत्या० ५, पृ० २२; १।१।९, पृ० ५८ ) पदमञ्जर्यां ( १।१।९, पृ० ५८ ) च।

६. उद्धृतं न्यासे ( प्रत्या० ५, पृ० २२; १।१।९, पृ० ५८ ) पदमञ्जर्यां ( १।१।९, पृ० ५८ ) च।

७. उद्धृतं न्यासे ( प्रत्या० ५, पृ० २५; १।१।९, पृ० ५९ )।

१७. कण्ठ्यनासिक्यमनुस्वारमेके ।

१८. यमाश्च नासिक्यजिह्वामूलीया एकेषाम् ।

१९. ए ऐ कण्ठतालव्यौ ।[1]

२०. ओ औ कण्ठोष्ठ्यौ ।[2]

२१. ङञणनमाः स्वस्थाननासिकास्थानाः ।

२२. द्विवर्णानि सन्ध्यक्षराणि ।

२३. सरेफ ऋवर्णः ।[3]

२४. [ इति ] संयुक्ता वर्णाः ।

२५. एवमेतानि स्थानानि ।

## २—करणप्रकरणम्

१. करणमपि ।

२. जिह्व्यतालव्यमूर्धन्यदन्त्यानां जिह्वा करणम् ।

३. जिह्वामूलेन जिह्व्यानाम् ।

४. जिह्वामध्येन तालव्यानाम् ।

५. जिह्वोपाग्रेण मूर्धन्यानाम ।

६. जिह्वाग्राधः करणं वा ।

७. जिह्वाग्रेण दन्त्यानाम् ।

८. शेषाः स्वस्थानकरणाः ।

९. इत्येतत् करणम् ।

---

१. उद्धृतं न्यासे ( १।१।६, पृ० ५८; १।१।४८, पृ० ९२ ) पदमञ्जर्यां ( १।१।९, पृ० ५८ ) च ।

२. उद्धृतं न्यासे (प्रत्या० ५, पृ० २३; १।१।६, पृष्ठ ५८; १।१।४८, पृष्ठ ९२) पदमञ्जर्यां ( १।१।९, पृष्ठ ५८ ) च ।

३. द्र० येषां दर्शनमर्धमात्रा कालो रेफ ऋकारेऽस्तीति तन्मतेन·······। येषामपि दर्शनं मात्राचतुर्थभागो रेफ ऋकार इति·······। महाभाष्यप्रदीपे ८।४।१ कैयटः । अत्रापिशलशिक्षायामस्मिन् सूत्रे निर्दिष्टा टिप्पण्यपि द्रष्टव्या ।

## ३—अन्तःप्रयत्नप्रकरणम्

१. प्रयत्नोऽपि द्विविधः ।

२. आभ्यन्तरो बाह्यश्च ।

३. स्वस्थाने आभ्यान्तरस्तावत् ।

४. स्पृष्टकरणाः स्पर्शाः ।[1]

५. ईषत्स्पृष्टकरणा अन्तस्थाः ।[2]

६. ईषद् विवृतकरणा ऊष्माणः ।

७. विवृतकरणा वा ।

८. विवृतकरणाः स्वराः ।[3]

९. तेभ्य ए ओ विवृततरौ ।[4]

१०. ताभ्यामै औ ।[5]

११. ताभ्यामकारः ।[6]

१२. संवृतस्त्वकारः ।[7]

१३. इत्येषोऽन्तःप्रयत्नः ।

---

१. उद्धृतं न्यासे (१।१।६, पृ० ५६ ) पदमञ्जर्यां (१।१।६, पृ० ५७) च ।

२. उद्धृतं न्यासे (१।१।६, पृ० ५९) पदमञ्जर्यां (१।१।६, पृ० ५७) च ।

३. उद्धृतं न्यासे ( प्रत्या० सूत्र १, पृष्ठ ८ ) पदमञ्जर्यां ( प्रत्या० १, पृष्ठ १८ ) च ।

४. उद्धृतं न्यासे (प्रत्या० १, पृ० ८) पदमञ्जर्यां (प्रत्या १, पृ० १८) च ।

५. उद्धृतं पदमञ्जर्याम् ( प्रत्या० १, पृ० १८ ) । न्यासे तु 'ताभ्यामपि ऐ औ' इत्येवं पाठः ।

६. 'ताभ्यामप्याकारः' इत्येवं न्यासे ( प्रत्या० १; पृ० ८ ) पदमञ्जर्यां ( प्रत्या० १, पृ० १८ ) च पाठः ।

७. 'संवृतोऽकारः, इत्येवं न्यासे ( प्रत्या० १, पृ० ८ ) पदमञ्जर्यां ( प्रत्या० १, पृ० १८ ) च पाठः ।

## ४—बाह्यप्रयत्नप्रकरणम्

१. अथ बाह्याः प्रयत्नाः ।

२. वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः ।[1]

३. वर्गयमानां प्रथमा अल्पप्राणा इतरे सर्वे महाप्राणाः ।[2]

४. वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च ।[3]

५. वर्गयमानां तृतीया अन्तस्थाश्चाल्पप्राणा इतरे सर्वे महाप्राणाः ।[4]

६. यथा तृतीयास्तथा पञ्चमाः ।[5]

७. आनुनासिक्यमेषामधिको गुणः ।[6]

८. कादयो मावसानाः स्पर्शाः ।[7]

९. यादयोऽन्तस्थाः ।[8]

---

१. उद्धृतं न्यासे ( १।१।९, पृष्ठ ५७; १।१।५०, पृष्ठ ८५ ) पदमञ्जर्यां ( १।१।९, पृष्ठ ५७ ) च ।

२. 'वर्गयमानां प्रथमेऽल्पप्राणा इतरे महाप्राणाः' इत्येवं पदमञ्जर्यां ( १।१।९, पृष्ठ ५७ ) न्यासे ( वर्ग्ययमानां' पाठा० १।१।९, पृष्ठ ५७ ) च पठ्यते ।

३. उद्धृतं न्यासे ( प्रत्या० ५, पृष्ठ २५, १।१।९, पृष्ठ ५७; १।१।५०, पृष्ठ ८५) पदमञ्जर्यां ( १।१।९, पृष्ठ ५७) च । पदमञ्जर्यां न्यासे (१।१।९, पृष्ठ ५७) उद्धरणे 'नासिक्याश्च' पदं नास्ति )

४. उद्धृतं न्यासे ( १।१।९, पृष्ठ ५७,; १।१।५०, पृष्ठ ९५—पूर्वोद्धरणे 'वर्ग्य' पाठः ) पदमञ्जर्यां ( १।९, पृष्ठ ५८–'सर्वे' पदं नास्ति ) च ।

५. उद्धृतं न्यासे ( प्रत्या० ५, पृष्ठ २५; १।१।९, पृष्ठ ५७, ) पदमञ्जर्यां ( १।१।९, पृष्ठ ५८ ) च ।

६. उद्धृतं न्यासे (१।१।९, पृष्ठ ५७) पदमञ्जर्यां (१।१।९, पृष्ठ ५८) च ।

७. उद्धृतं न्यासे ( १।१।९, पृ० ५७ ) पदमञ्जर्यां (१।१।९।५७) च

८. न्यासे ( १।१।९, पृ० ५७ ) पदमञ्जर्यां ( १।१।९, पृ० ५७ ) च 'यरलवा अन्तस्थाः' इत्येवं पठ्यते, सोऽर्थतोऽनुवादो द्रष्टव्यः ।

१०. शादय उष्माणः ।[1]

११. सस्थानेन द्वितीयाः ।[2]

१२. हकारेण चतुर्थाः ।[3]

१३. इत्येष बाह्यः प्रयत्नः ।

## ५—स्थानपीडनप्रकरणम्

१. तत्र स्पर्शयमवर्णकरो वायुरयःपिण्डवत् स्थानमभिपीडयति ।

२. अन्तस्थवर्णकरो वायुर्दारुपिण्डवत् ।

३. ऊष्मस्वरवर्णकारो वायुरूर्णापिण्डवत् ।

## ६—वृत्तिकारप्रकरणम्

१. एवं व्याख्याने वृत्तिकाराः पठन्ति—अष्टादशप्रभेदमवर्णकुलमिति । तत्कथमुक्तम्

२. ह्रस्वदीर्घप्लुतत्वाच्च त्रैस्वर्योपनयेन च ।
आनुनासिक्यभेदाच्च संख्यातोऽष्टादशात्मकः ॥ इति ।

३. एवमिवर्णादयः ।

४. ऌवर्णस्य दीर्घा न सन्ति ।[4]

५. तं द्वादशप्रभेदमाचक्षते ।[5]

६. यदृच्छाशब्देऽशक्तिजानुकरणे वा यदा दीर्घाः स्युस्तदाऽष्टादशप्रभेदं ब्रुवते क्लृपक इति ।

---

१. उद्धृतं न्यासे ( १।१।५० पृष्ठ ९६, पदमञ्जर्यां ( १।१।५०, पृष्ठ ९७ ) च । यत्तु न्यासे ( १।१।९, पृष्ठ ५७ ) पदमञ्जर्यां ( १।१।९, पृ० ५७ ) च 'शषसहा उष्माणः ' इत्येवं पाठ उपलभ्यते सोऽर्थतोऽनुवादो द्रष्टव्यः ।

२. उद्धृतं न्यासे ( १।१।५०, पृष्ठ ९६, ९७ ) पदमञ्जर्यां ( १।१।५० पृष्ठ ९७ ) च ।

३. उद्धृतं न्यासे (१।१५०, पृ० ९६, ९७) पदमञ्जर्यां (१।१।५०, ९७) च ।

४. उद्धृतं काशिकायाम् ( १।१।९ ) ।

५. उद्धृतं काशिकायाम् ( १।१।९ ) ।

७. सन्ध्यक्षराणां ह्रस्वा न सन्ति ।[1]

८. तान्यपि द्वादशप्रभेदानि ।[2]

९. छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं [च] पठन्ति ।[3]

१०. तेषामष्टादशप्रभेदानि ।

११. अन्तस्था द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च ।[4]

१२. रेफोष्मणां सवर्णा न सन्ति ।[5]

१३. वर्ग्यो वर्ग्येण सवर्णः ।[6]

## ७—प्रक्रमप्रकरणम्

एष क्रमो वर्णानाम् ।

२. तत्रैषां स्थानकरणप्रयत्नानां कथंप्रसिद्धिरित्युच्यते ।

३. इह यत्र स्थाने वर्णा उपलभ्यन्ते तत् स्थानम् ।

४. येन निर्वर्त्यन्ते तत् करणम् ।

५. प्रयतनं प्रयत्नः ।[7]

६. उत्साहः प्रयत्नः ।

७. स्पृष्टतादि वर्णगुणः ।

---

१. उद्धृतं काशिकायाम् ( १।१।९ ) । 'पाणिनीयेऽपि' इत्येवं कृत्वोद्धृतः तैत्तिरीयप्रतिशाख्यस्य त्रिरत्नभाष्ये ( मैसूर सं० पृ० ४५० ) ।

२. उद्धृतं काशिकायाम् ( १।१।९ ) ।

३. तुलना कार्या—ननु च भोश्छन्दोगानां सात्युमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते इति । महाभाष्ये प्रत्या० ३; १।१।४७ सूत्रे च ।

४. स्वल्पपाठान्तरेणोद्धृतं काशिकायाम् ( १।१।९ ) पदमञ्जर्यां (प्रत्या० ६, पृ० ३३ ) च ।

५. उद्धृतं महाभाष्ये ( प्रत्या० ५ ) काशिकायां ( १।१।९ ) पदमञ्जर्यां ( प्रत्या० ५ ) न्यासे ( प्रत्या० ५ ) च ।

६. उद्धृतं महाभाष्यदीपिकायां (पृष्ठ १८४हस्त०) काशिकायां (१।१।९) च

७. उद्धृतं महाभाष्ये ( १।१।९ ) ।

## ८—नाभितलप्रकरणम्

१. [1]तत्र नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो[2] नाभिवायुरुर्ध्वमाक्रामन्नुरआदीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते । विधार्यमाणः सोऽपि तत्स्थानानि विहन्ति[3] । तस्मात् स्थानाभिघाताद् ध्वनिरुत्पद्यत आकाशे, सा वर्णश्रुतिः । स वर्णस्यात्मलाभः ।

२. तत्र वर्णानामुत्पद्यमाने[4] यदा स्थानकरणप्रयत्नपर्यन्तं परस्परं स्पृशति[5] सा स्पृष्टता ।

३. यदेषत् स्पृशति[6] सा ईषत्स्पृष्टता ।

४. यदा दूरेण स्पृशति[7] सा विवृता[8] ॥

५. यदा सामीप्येन स्पृशति[9] सा संवृता ।[10]

६. एषोऽन्तः प्रयत्नः ।[11]

७. अथ बाह्यः प्रयत्नः ।[11]

८. स एवेदानीं प्राणो नाभिवायुरु[12]र्ध्वमाक्रम्य मूर्ध्नि प्रतिहते[13] निवृत्तो

---

१. न्यासे (१।१।९, पृष्ठ ५६, ५७) ऽस्य प्रकरणस्य १–२३ सूत्राण्युद्धृतानि।

२. प्राणो नाम उर्ध्वमाक्रमन्नुरःप्रभृतीनामन्यतमस्मिन्—न्यासे । द्रष्टव्यमत्रास्यैव प्रकरणस्याष्टमे चतुर्दशे च सूत्रे नाभिपदम् । लघुपाठे तु 'प्राणो नाम' इत्येव पठ्यते ।

३. स विधार्यमाणः स्थानमभिहन्ति । ततः—न्यासे ।

४. वर्णध्वनावुत्पद्याने—न्यासे ।

५. ० प्रयत्नाः परस्परं स्पृशन्ति—न्यासे ।

६. ईषद् यदा स्पृशन्ति—न्यासे ।

७. दूरेण यदा स्पृशन्ति—न्यासे न्यासे तु चतुर्थपञ्चमसूत्रयोः पौर्वापर्यं विद्यते ।

८. द्रष्टव्यमत्रस्यैव प्रकरणम् २६ षड्विंशं सूत्रम् ।

९. समीप्येन यदा स्पृशन्ति—न्यासे ।

१०. द्रष्टव्यमत्रास्यैव २६ षड्विंशं सूत्रम् ।

११. नास्ति सूत्रम् — न्यासे ।

१२. स एव प्राणो नाम वायुरूर्ध्वमाक्रामन्— न्यासे ।

१३. प्रतिहतो०—न्यासे ।

तदा कोष्ठे संहन्यमाने[1] गलबिलस्य संवृतत्वात् संवारो नाम वर्णधर्मो जायते[2], वृितत्वाद् विवारः ।

९. तौ संवारविवारौ ।[3]

१०. तत्र यदा कण्ठबिलं संवृतत्वं तदा नादो जायते ।[4]

११. विवृते तु कण्ठबिले श्वासोऽनुजायते ।[5]

१२. तौ श्वासनादावनुप्रदानावित्याचक्षते ।[6]

१३. अन्ये श्वासनादानुप्रदानं व्यञ्जने नादवत् ।[7]

१४. तत्र यदा नाभिस्थलजध्वनौ[8] नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गाद्[9] घोषो जायते ।

१५. यदा श्वासोऽनुप्रदीयते तदा श्वास[ ध्वनि ]संसर्गाद्[10] अघोषो जायते ।[11]

१६. सा घोषवदघोषता ।[12]

१७. महति वायौ महाप्राणः ।

१८. अल्पे वायावल्पप्राणः ।

१९. साल्पप्राणमहाप्राणता ।[13]

---

१. निवृत्तो यदा कोष्ठमभिहन्ति तदा कोष्ठेऽभिहन्यमाने--न्यासे ।
२. वर्णधर्मं उपजायते—न्यासे ।
३. नास्ति सूत्रं--न्यासे ।
४. संवृते गलबिलेऽव्यक्तः शब्दो नादः—न्यासे । न्यासेऽर्थतोऽनुवादः स्यात् ।
५. विवृते श्वासः--न्यासे । न्यासेऽर्थतोऽनुवादः स्यात् ।
६. तौ श्वासनादानुप्रदानाविति केचिदाचक्षते—न्यासे ।
७. अन्ये तु ब्रुवते अनुप्रदानमनुस्वानो घण्टानिर्ह्रादवत्--न्यासे ।
८. यदा स्थानाभिघातजे ध्वनौ—न्यासे ।
९. ० ध्वनिसंगाद्—न्यासे
१०. ० ध्वनिसंगाद्—न्यासे ।
११. जायते—नास्ति न्यासे ।
१२. सूत्रं नास्ति—न्यासे ।
१३. सूत्रं नास्ति—न्यासे ।

२०. [ यत्र ] महाप्राणत्वम् ऊष्माणस्ते ।[१]

२१. तत्र[२] यदानुसारिप्रयत्नस्तीव्रो भवति तदा गात्राणां[३] निग्रहः, कण्ठबिलस्य चाल्पत्वं[४] स्वरस्य च वायोस्तीव्रगतित्वाद् रौक्ष्यं भवति—तमुदात्तमाचक्षते ।

२२. यदा मन्दः प्रयत्नो भवति तदा गात्राणां[५] प्रसन्नत्वं कण्ठबिलस्य च बहुत्वं[६] स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति । तमनुदात्तमाचक्षते ।

२३. उदात्तानुदात्त[७]सन्निकर्षात् स्वरित इति ।

२४. स एवं प्रयत्नोऽभिनिवृत्तः कृत्स्नः प्रयत्नो भवति ।

२५. स एवमापिशलेः पञ्चदशभेदाख्या वर्णधर्मा भवन्ति ।

२६. तद्यथा—स्पृष्टता ईषत्स्पृष्टता विवृता संविवृता च ।
संवारविवारौ श्वासनादौ घोषवदघोषता ।
अल्पप्राणमहाप्राणता उदात्तानुदात्तस्वरिता इति ।

२७. इदानीं शिक्षाग्रन्थः श्लोकैरुपसंह्रियते—

२८. अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥

२९. स्पृष्टत्वमीषत्स्पृष्टत्वं संवृतत्वं तथैव च ।
विवृतत्वं च वर्णानामन्तःकरणमुच्यते ॥

३०. कालो विवारसंवारौ श्वासनादावघोषता ।
घोषोऽल्पप्राणता चैव महाप्राणः स्वरास्त्रयः ॥

३१. बाह्यं करणमाहुस्तान् वर्णानां वर्णवेदिनः ॥

* इति पाणिनीयशिक्षासूत्राणां वृद्धपाठः समाप्तः *

---

१. सूत्रं नास्ति—न्यासे ।
२. तत्र—नास्ति । यदा सर्वाङ्गानुसारी—न्यासे ।
३. गात्रस्य—न्यासे ।
४. कण्ठविवरस्य चाणुत्वं—न्यासे
५. गात्रस्य स्रंसनं—न्यासे ।
६. महत्त्वं—न्यासे ।
७. उदात्तानुदात्तस्वरसन्निकर्षात्—न्यासे ।

ओम्

# अथ पाणिनीयशिक्षा

[ लघु-पाठः[1] ]

१. आकाशवायुप्रभवः शरीरात्
समुच्चरन् वक्त्रमुपैति नादः ।
स्थानान्तरेषु प्रविभज्यमानो
वर्णत्वमागच्छति यः स शब्दः ।

२. तमक्षरं ब्रह्म परं पवित्रं
गुहाशयं सम्यगुशन्ति विप्राः ।
स श्रेयसा चाभ्युदयेन चैव
सम्यक् प्रयुक्तः पुरुषं युनक्ति ।

३. [ वर्णास् ] त्रिषष्टिः ।

४. स्थानमिदं, करणमिदं,
प्रयत्न एष द्विधा, ऽनिलः
स्थानं पीडयति, वृत्तिकारः
प्र क्रम एषो, ऽथ नाभितलात् ।।

---

१. पाणिनीयशिक्षासूत्राणामयं पाठो श्रीमद्भगवत्पाददयानन्दसरस्वतीभिर्महता प्रयत्नेनोपलभ्य १९३६ वैक्रमाब्दे आर्यभाषयाऽनूद्य "वर्णोच्चारण-शिक्षा" नाम्ना प्रकाशितः । भगवत्पादैरस्याः शिक्षाया यः कोश उपलब्ध आसीत् स मध्ये मध्ये लेखकदोषात् त्रुटितः, अन्ते च खण्डितोऽभूत् । विशेषो भूमिकायां द्रष्टव्यः ।

## १—स्थानप्रकरणम्

१. अकुहविसर्जनीयाः कण्ठ्याः ।
२. हविसर्जनीयावुरस्यावेकेषाम् ।
३. जिह्वामूलीयो जिह्वयः ।
४. कवर्ग ऋवर्णश्च जिह्वयः ।
५. सर्वमुखस्थानमवर्णमित्येके ।
६. कण्ठ्यानास्यमात्रानित्येके ।
७. इचुयशास्तालव्याः ।
८. ऋटुरषा मूर्धन्याः ।
९. रेफो दन्तमूलीय एकेषाम् ।
१०. दन्तमूलस्तु तवर्गः ।
११. लृतुलसा दन्त्याः ।
१२. वकारो दन्त्योष्ठ्यः ।
१३. सृक्किणीस्थानमेकेषाम् ।
१४. उपूपध्मानीया ओष्ठ्याः ।
१५. अनुस्वारयमा नासिक्याः ।
१६. कण्ठ्यनासिक्यमनुस्वारमेके ।
१७. यमाश्च नासिक्यजिह्वामूलीया एकेषाम् ।
१८. एदैतौ कण्ठ्यतालव्यौ ।
१९. ओदौतौ कण्ठ्योष्ठ्यौ ।
२०. ङञणनमाः स्वस्थाननासिकास्थानाः ।
२१. द्वे द्वे वर्णे सन्ध्यक्षराणामरम्भके भवत इति ।
२२. सरेफ ऋवर्णः ।

## २—करणप्रकरणम्

१. जिह्वयतालव्यमूर्धन्यदन्त्यानां जिह्वा करणम् ।
२. जिह्वामूलेन जिह्वयानाम् ।

३. जिह्वामध्येन तालव्यानाम् ।[१]

४. जिह्वोपाग्रेण मूर्धन्यानाम् ।

५. जिह्वाग्राधः करणं वा ।

६. जिह्वाग्रेण दन्त्यानाम् ।

७. इत्येतदन्तःकरणम् ।

## ३—अन्तःप्रयत्नप्रकरणम्

१. प्रयत्नोऽपि द्विविधः ।

२. आभ्यन्तरो बाह्यश्च ।

३. आभ्यान्तरस्तावत् ।

४. स्पृष्टकरणाः स्पर्शाः ।

५. ईषत्स्पृष्टकरणा अन्तस्थाः ।

६. ईषद्विवृतकरणा ऊष्माणः ।

७. विवृतकरणा वा ।

८. विवृतकरणाः स्वराः ।

९. संवृतस्त्वकारः ।[२]

१०. इत्येषोऽन्तःप्रयत्नः ।

## ४—बाह्यप्रयत्नप्रकरणम्

१. अथ बाह्याः प्रयत्नाः ।

२. वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदानाश्चाघोषाः ।

३. एके अल्पप्राणा इतरे महाप्राणाः ।

४. वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च ।

५. [ एकेऽन्तस्थाश्चाल्पप्राणा इतरे सर्वे महाप्राणाः ] ।[२]

६. यथा तृतीयास्तथा पञ्चमाः ।

७. आनुनासिक्यमेषामधिको गुणः ।

---

२. लेखकदोषात् सूत्रमिदं नष्टं स्यात् ।

३. लेखकप्रमादात् सूत्रमिदं नष्टं स्यात् ।

८. शादय उष्माण: ।

९. [स]स्थानेन द्वितीया: ।

१०. हकारेण चतुर्था: ।

## ५—स्थानपीडनप्रकरणम्

१. तत्र स्पर्शयमवर्णकरो वायुरय:पिण्डवत् स्थानमभिपीडयति ।

२. अन्तस्थवर्णकरो वायुर्दारुपिण्डवत् ।

३. ऊष्मस्वरवर्णकारो वायुरूर्णापिण्डवत् ।

४. उक्ता: स्थानकरणप्रयत्ना: ।[1]

## ६—वृत्तिकारप्रकरणम्

१. अवर्णो ह्रस्वदीर्घप्लुतत्वाच्च त्रैस्वर्योपनयेन चानुनासिक्यभेदाच्च संख्यातोऽष्टादशात्मक:

२. एवमिवर्णादय: ।

३. ऌवर्णस्य दीर्घा न सन्ति ।

४. तं द्वादशभेदमाचक्षते ।

५. यदृच्छाशब्देऽशक्तिजानुकरणे वा यदा दीर्घा: स्युस्तदाऽष्टादशभेदं ब्रुवते क्लृपक इति ।

६. सन्ध्यक्षराणां ह्रस्वा न सन्ति ।

७. तान्यपि द्वादशप्रभेदानि ।

८. अन्तस्था द्विप्रभेदा[2] रेफवर्जिता: सानुनासिका निरनुनासिकाश्च ।

९. रेफोष्मणां सवर्णा न सन्ति ।

१०. वर्ग्यो वर्ग्येण सवर्ण: ।

---

१. सप्तमप्रकरणे सूत्रमिदं पुन: पठयते, वृद्धपाठे सूत्रमिदं न त्विह पठयते न च सप्तमप्रकरणे ।

२. पूर्वत्र चतुर्थपञ्चमयो: सूत्रयो: 'भेद' इत्येव पठयते ।

## ७—प्रक्रमप्रकरणम्

१. एष क्रमो वर्णानाम् ।

२. तदेते कौशिकीया श्लोकाः[1]—

३. सर्वान्ते योगवाहत्वाद् [illegible] ।
अकार उच्चारणार्थो [illegible] ॥

४. ऋकार-ऌकारयोः रेफलकारौ च [illegible] ।
पाणिन्युक्तौ [illegible] ॥

५. नासिक्यैर्नोक्तं कार्याणां न क्रमोऽस्त्यतः ।
तेषामनुस्वारः संस्थानवर्णा[illegible] ।

६. उक्ताः स्थानकरणप्रयत्नाः ।[2]

७. इह यत्र स्थाने वर्णा उपलभ्यन्ते तत् स्थानम् ।

८. येन निर्वर्त्यन्ते तत् करणम् ।

९. प्रयतनं प्रयत्नः ।

## ८—नाभितलप्रकरणम्

१. तत्र नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाम वायुरूर्ध्वमाक्रामन्नुर आदीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते । ..........[3]

.............................................................................................

.............................................................................................

[ इति पाणिनीयशिक्षासूत्राणां लघुपाठः ]

---

१. पाणिनीयशिक्षाया लघुपाठे २-४ सूत्राणि न सन्ति । आपिशलिशिक्षायामपि न पठ्यन्ते । तेन लघुपाठ [illegible] । कदाचित् [illegible] सूत्राण्येतानि केनचित् पाठकेन प्रान्ते लिखितानि [illegible], [illegible] कालेन सूत्राणां मध्ये प्रविष्टानि स्युरिति संभाव्यते ।

२. वर्णोच्चारणशिक्षायामपि [illegible] सूत्राण्युत्तरप्रकरणादौ पठ्यन्ते ।

३. इतोऽग्र आप्रकरणान्तं पाठो नष्टः, कोशस्य त्रुटितत्वात् ।

# अथ चान्द्रवर्णसूत्राणि

१. स्थानकरणप्रयत्नेभ्यो वर्णा जायन्ते ।

२. तत्र स्थानम् ।

३. कण्ठोऽकुहविसर्जनीयानाम् ।

४. कण्ठतालुकन् इदेदैताम् ।

५. कण्ठोष्ठम उदोदौताम् ।

६. मूर्धा ऋटुरषाणाम् ।

७. दन्ता लृतुलसानाम् ।

८. नासिकाऽनुस्वारस्य ।

९. स्वस्थानानुनासिका ङञणनमाः ।

१०. तात्विचुयशानाम् ।

११. ओष्ठावुपूपध्मानीयाम् ।[1]

१२. दन्तौष्ठं वकारस्य ।

१३. जिह्वामूलं जिह्वामूलीयस्य ।

१४. करणम् ।

१५. जिह्वाग्रं दन्त्यानाम् ।

१६. जिह्वोपाग्रं शिरस्यानाम् ।[2]

१७. जिह्वामध्यं तालव्यानाम् ।

१८. शेषाः स्वस्थानकरणाः ।

---

१. 'ओष्ठौ उपध्मानीययोः' इत्यपपाठो घोषसंस्कणे ।

२. षोडशसप्तदशे सूत्रे घोषसंस्करणे वैपरीत्येन पठ्यते ।

१९. प्रयत्नो द्विविधः ।

२०. आभ्यन्तरो बाह्यश्च ।

२१. तत्राभ्यन्तरः ।

२२. संवृतत्वं विवृतत्वं स्पृष्टत्वमीषत्स्पृष्टत्वं च ।

२३. संवृतत्वम् अकारस्य ।

२४. विवृतत्वं स्वराणामूष्मणां[1] च ।

२५. तेभ्यो विवृततरत्व[2]मेदोतोः ।

२६. ताभ्यामैदौतोः ।

२७. ताभ्यामप्यकारस्य ।

२८. स्पृष्टत्वं स्पर्शानाम् ।

२९. ईषत्स्पृष्टत्वमन्तस्थानाम् ।

३०. बाह्यः ।

३१. वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीयाश्च विवृतकण्ठाः[3] श्वासानुप्रदाना अघोषाः ।

३२. प्रथमतृतीयपञ्चमा अन्तस्थाश्चाल्पप्राणाः ।

३३. इतरे[4] महाप्राणाः ।

३४. तृतीयचतुर्थपञ्चमाः सानुस्वारान्तस्थहकाराः संवृतकण्ठा नादानुप्रदाना घोषवन्तः ।

३५. द्वितीयचतुर्थाः शषसहाश्चोष्माणः ।

३६. कादयो मावसानाः स्पर्शाः ।

३७. अन्तस्था यरलवाः ।

३८. इत्येष बाह्यप्रयत्नः ।

---

१. ऊष्मणां स्वराणां च—घोषसंस्करणे ।

२. विवृतत्वं—घोषसं० ।

३. विवृतकण्ठा नादानु०—घोषसंस्करणेऽपपाठः, एषां श्वासानुप्रदानत्वात् ।

४. इतरे सर्वे—घोषसं० ।

३९. अत्र चावर्णो ह्रस्वो दीर्घः प्लुत इति त्रिधा भिन्नः ।

४०. प्रत्येकमुदात्तानुदात्तस्वरितभेदेन सानुनासिकनिरनुनासिकभेदेन चाष्टादशधा भवति ।

४१. एवमिवर्णोवर्णावृवर्णश्च ।[1]

४२. लृवर्णस्य दीर्घा न सन्ति तेन स[2] द्वादशधा भवति ।

४३. संध्यक्षराणां ह्रस्वाभावात् तान्यपि द्वादशधा ।

४४. एकमात्रिको ह्रस्वः ।

४५. द्विमात्रिको दीर्घः ।

४६. त्रिमात्रिको प्लुतः ।

४७. उच्चैरुदात्तः ।

४८. नीचैरनुदात्तः ।

४९. समाहारः स्वरितः ।

५०. स्वस्थानानुनासिको निरनुनासिकश्च ।

५१. अन्तस्था द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च ।

* इति चन्द्रगोमिकृतानि वर्णसूत्राणि समाप्तानि *

---

१. 'एवमिवर्णोवर्णो ऋवर्णश्च' इत्यसंहितया पाठो घोषसंस्करणे ।

२. 'स' इति नास्ति घोषसंस्क० ।